# संस्कृत-वाङ्मय का बृहद् इतिहास

## प्रथम खण्ड
## वेद

प्रधान सम्पादक
पद्मभूषण आचार्य श्री बलदेव उपाध्याय

सम्पादक
प्रो. व्रज बिहारी चौबे

उत्तर प्रदेश संस्कृत संस्थान
लखनऊ

# संस्कृत वाङ्मय का बृहद् इतिहास

प्रथम वेदखण्ड

(संहिता-ब्राह्मण-आरण्यक-उपनिषद् एवं वैदिक संस्कृति)

**प्रधान सम्पादक :**

पद्मभूषण आचार्य बलदेव उपाध्याय

**सम्पादक :**

प्रो. व्रजबिहारी चौबे

उत्तर प्रदेश संस्कृत संस्थान

लखनऊ

# ज्ञानमहासत्रम्

संसारेष्वप्रतिमं सम्पूर्णैर्गौरवैर्जुष्टम्।
सर्वविधानैः पुष्टं प्रणमामो संस्कृतेषु साहित्यम्।।१।।

स्वातन्त्र्यानन्तरमथ तदिदं किञ्चिद्विनिर्मलं ज्योतिः।
समुदेत्यन्तः सलिलं समुत्सुकं दर्शनं दातुम्।। २।।

संस्थानसंस्थया या संस्कृतसेवा सुसंदृब्धा
उत्तरदेशविभूषा तयेदमारब्धमथ महासत्रम्।। ३।।

अष्टादशभागेष्वथ सुबृहत्काय-प्रकृष्टेषु।
संस्कृतसाहित्यस्था दीप्ततरा काऽऽपि चित्रवियदालिः।।४।।

प्रत्येकस्मिन्भागे विद्यासंख्यामहत्त्वसुख्याते।
मूर्धन्या विद्वांसः सश्रममेतन्निवर्तयन्त्यार्याः।।५।।

इतिहासमहाग्रन्थः सोऽयं वा कल्पनातीतः।
आद्यात्कालादधुनापर्यन्तं सर्वमामृशति ।। ६।।

उत्तरमुत्तरमेतत्सर्वं संस्कृतविरुद्धानाम्।
मित्रं मित्रं चैतत्सदनुष्ठानं वरेण्यानाम्।।७।।

गुरुगुरुरूपं निखिलं सहस्रशो जागरूकाणाम्।
आगामिनि सन्ताने रिक्थं गीर्वाणवाणीनाम्।। ८ ।।

दूरस्थान् विज्ञान्प्रति सारल्यैर्वाथ गाम्भीर्यैः।
निखिलं संस्कृतवाङ्मयमालोडितवैभवं जयति।। ९।।

बलदेवोपाध्यायः

## प्रणामाञ्जलिः

श्री बलदेवोपाध्याया गुरवोऽत्र प्रणम्यन्ते।
यत्सफले निर्देशेऽमृतमेतन्नूनमवतीर्णम् ।।

अलका श्रीवास्तवा

# भूमिका

## संस्कृतसाहित्यस्य मूलप्रवृत्तिः-

साहित्यं भवति समाजस्य दर्पणः। समाजो यादृशो भविता तादृश एव साहित्ये प्रतिबिम्बितो भवति। समाजस्य रूप-रङ्गवृद्धिह्रासोत्थानपतनसमृद्धिदुरवस्थानां निश्चित-ज्ञानस्य प्रमुखं साधनमस्ति तत्कालिकं साहित्यम्। इत्थमेव साहित्यं संस्कृतिमप्यावहति। संस्कृतेरात्मा साहित्यमध्यादेव स्वं दृश्यं सदा दर्शयति। संस्कृतेः समुचितप्रचार-प्रसारयोः श्रेष्ठं साधनं साहित्यमेव विद्यते। संस्कृतेर्मूलाधारो यदि भौतिकवादाश्रितः स्यात् तर्हि तत्रत्यं साहित्यं कथमप्याध्यात्मिकं भवितुं नार्हति। यदि च संस्कृतेरभ्यन्तरे आध्यात्मिकताया भव्या भावना उच्छलन्ति तर्हि तद्देशस्य जातेश्च साहित्यमपि अध्यात्मेनानुप्राणितमवश्यं भवति। साहित्यं सामाजिकभावनायाः विचारस्य च विशुद्धाभिव्यञ्जकत्वेन सांस्कृतिकाचार-विचारयोः प्रचारकत्वेन च संस्कृतेः सन्देशं सहृदयेषु जनेषु प्रापयति।

अस्ति संस्कृतसाहित्यस्येतिहास उपर्युक्तसिद्धान्तस्य समर्थकः। भारतवर्षे सांसारिकजीवनस्योपकरणानां सौलभ्येन भारतीयसमाजः जीवनसंग्रामस्य विकटसंघर्षात् पृथग् भूत्वा आनन्दानुभूतिमेव स्वकीयमुद्देश्यं मन्यते। अतएव संस्कृतकाव्यं जीवनस्य विषमासु परिस्थितिषु आनन्दगवेषणाय सततं यतते।

आनन्द एवास्ति भगवतः सच्चिदानन्दस्य पूर्णो विग्रहः। अतएव संस्कृतकाव्यस्य आत्मा रसः स्वीकृतः। श्रोतुः पाठकस्य च हृदये आनन्दोन्मेष एव काव्यस्य परमं प्रयोजनं विद्यते। लक्षणग्रन्थेषु गुणालंकारादिकाव्याङ्गानां विवेचनं सदपि रसवर्णनमेव मुख्यं प्रतिपाद्यमस्ति। भारतीयसमाजस्य वर्तते मेरुदण्डो गृहस्थाश्रमः। अन्येषां त्रयाणामाश्रमाणां स्थितिः गृहस्थाश्रमाश्रिता एव। अतएव भारतस्य प्रवृत्तिमूलकः समाजो गृहस्थधर्मस्य महत्तामंगीकरोति, संस्कृतसाहित्ये च गार्हस्थ्यधर्मस्य हृदयावर्जकं साङ्गोपाङ्गं चित्रणं समुपलभ्यते। संस्कृतवाङ्गयस्याद्यं काव्यं रामायणं गृहस्थाश्रमस्यैव विशदं व्याख्यानं विद्यते। तत्र राज्ञो दशरथस्यादर्शपितृत्वं, कौशल्याया आदर्शमातृत्वं सीताया आदर्शसतीत्वं, भरतस्यादर्शभ्रातृत्वं, सुग्रीवस्यादर्शमित्रत्वं सर्वाधिकं च रामचन्द्रस्यादर्शपुत्रत्वं भारतीयगृहस्थ-धर्मस्यैव मनोरमाः प्रशस्ताश्चाभिव्यक्तयः सन्ति।

## साहित्यं संस्कृतिश्च-

संस्कृतसाहित्यं भारतीयायाः संस्कृतेरस्ति प्रधानं वाहनम्। यदि संस्कृतकाव्येषु संस्कृतिः स्वीयामनुपमां गाथां श्रावयति, तर्हि संस्कृतनाटकेषु सा निजां कमनीयां क्रीडां दर्शयति। भारतीयसंस्कृतेः प्राणा आध्यात्मिकी भावना विद्यन्ते। त्यागेनानुजीवितं, तपसा पोषितं, तपोवने संवर्धितं, भारतीय संस्कृतेः शोभनमाध्यात्मिकं रूपं संस्कृतभाषाया ग्रन्थेषु स्वकीयं मनोरमं दृश्यं दर्शयत् आकर्षयति बलात् सहृदयानां मनांसि। वाल्मीकि-व्यास-कालिदास-भवभूति-बाणप्रभृतयः कवयः सहृदयानां हृदयकलिकां विकासयन्त्याः मनोरमायाः काव्यरचनायाः कारणेन यथा मान्याः तथैव भारतीयसंस्कृतेः विमलचिन्तनस्य कारणेनापि समादरणीयाः सन्ति।

संस्कृतकवयः शुद्धात्मनि विचरन्तः समाजस्य सुख-दुःखभावनया स्पृष्टाः सहानुभूतिभावान्विताः सन्तः स्वकाव्येषु जनताया हृदयभावान् प्रवृत्तीश्चावर्णयन्। ते हि भारतीयसंस्कृतेः श्लाघ्यान् आध्यात्मिकविचारान् अपि अङ्कितवन्तः। भारतीयसंस्कृतेः स्फुटं स्वरूपं संस्कृतसाहित्ये एव दृष्टिपथमायाति। बृहत्तरभारते भारतीयसंस्कृतेः प्रचारो न खड्गबलेन, अपितु लेखनीबलेनैवाभूत्। अधुनाऽपि तद्देशस्य सभ्यतासंस्कृत्योः संघटने संस्कृतसाहित्यमेव उपयोगि वर्तते। संस्कृतसाहित्येनैव तद्देशीया जनाः सभ्याः शिष्टाश्च कृताः।

## साहित्यं तत्त्वज्ञानञ्च-

संस्कृतसाहित्यस्य रूप-निर्माण-विकासाः भारतीयतत्त्वज्ञानेन प्रभाविताः सन्ति। अस्ति भारतीयं दर्शनं सदैव आशावादि। नैराश्यं करोतु मलिनं दर्शनगगनम् किञ्चित् क्षणम् किन्तु आशावादस्य चन्द्रोदयेन भवति पुनः प्रकाशस्निग्धमध्यात्मनभोमण्डलम्। तत्त्वबोधो नैराश्यात् आशायाः, विपत्तेः सम्पत्तेः दुःखात् सुखस्योद्गमं स्वीकरोति। नास्ति दुःखे विश्वस्यावसानः, जीवनमिदं व्यक्तित्वविकासे स्वतो महत्त्वं स्थापयति। संघर्षादेव शान्तेः प्रभा प्रस्फुटति। समरमध्ये विजयशङ्खनादो भवति। संसारस्य दुःखसंतोषक्लेशा अन्ततः सुखशान्त्यानन्देषु परिणमन्ते। अतएव नाटकस्योपसंहारो मङ्गलमयो क्रियते नाट्यकृद्भिः। काव्यं हि जीवनस्य पूर्णाभिव्यक्तिः। सत्कविः जीवनस्य सुखदुःखेषु रमते। स हि लोकजीवनमनुभूय तत्रत्यं मर्मस्थलं कमनीयभाषायाम् व्यनक्ति। तस्य काव्येषु सज्जनमनः स्पन्दते। जनताया मूकभावना अभिव्यक्तिमाप्नोति। संस्कृतेरग्रदूतः संस्कृत-कविः जीवनस्य अन्तस्तलं निरीक्ष्य तस्य मार्मिकं चित्रणं करोति। संस्कृतसाहित्यस्य इदमेवास्ति वैशिष्ट्यम्।

संस्कृतसाहित्यमलङ्कारपूर्णं कृत्रिमं चेति अस्ति पाश्चात्त्यविदुषां भ्रान्ता धारणा। संस्कृतकाव्येषु हार्दिकभावानामभिव्यक्तिः स्वाभाविकी वर्तते। संस्कृतकवयः मानवहृदयस्य सुपरीक्षकाः अतएव सत्यानुभूतिव्यञ्जनाय रसमयीं पद्धतिमुरीकृतवन्तः। अस्ति सर्वजन-बोधगम्यता संस्कृतकाव्यस्य विलक्षणता। माधुर्यप्रसादगुणाः अस्य काव्यस्य प्राणाः स्वीक्रियन्ते।

अस्माकं संस्कृतसाहित्यं विश्वस्य सम्पूर्णसाहित्यापेक्षया प्राचीनतायां, व्यापकतायाम-भिरामतायाञ्च श्रेष्ठं विद्यते। आध्यात्मिकसमस्यासमाधानपराः मानवमस्तिष्कविकासप्रकाशन-पराश्चोपनिषदः संस्कृतभाषायामेवोपनिबद्धाः सन्ति। विश्वस्योत्पत्तिप्रलयादिविषयाणाम् इतिहासं पुराणमेव प्रस्तौति तच्चापि संस्कृते एव निबद्धम्। आर्याणां प्राचीनपरम्परायाः प्रशस्तवर्णनपरं धर्मशास्त्रमपि अस्यामेव भाषायां निर्मितमस्ति। लौकिकाभ्युदयनिःश्रेयससिद्धिसाधकानि यावन्ति ज्ञानविज्ञानानि सन्ति तेषां सम्यगवबोधोपायः संस्कृतसाहित्यमेव। संस्कृतवाङ्गमयं हि परापरविद्ययोः मनोरमः कोशः। सर्वविषज्ञानस्य रहस्यावबोधने संस्कृतसाहित्यमेव सामर्थ्यं भजते। अतः साहित्यमिदं सर्वथा सर्वैरेव परिशीलनीयमिति निष्कर्षः।

## संस्कृतस्य संदेशः-

संस्कृतस्य प्रेरणाप्रदं समुत्साहवर्धकं च सन्देशं कर्णावुद्घाट्य सावधानेन मनसा श्रृण्वन्तु श्रीमन्तः। संस्कृतसाहित्यं तु पारलौकिकविषयमेव, आमुष्मिकतामेवाविष्कुरुते, प्राणिनामुपका-रक्षममैहिकं विषयं निसर्गादेव परित्यजतीति वदन्ति केचन समालोचकाः। न ते सन्ति संस्कृतस्य मर्मज्ञाः इतस्ततो ज्ञानलवसंचये निपुणा अपीमे विद्वांसो न स्पृशन्ति संस्कृतस्य हार्दम्। वैदिककालादेवाराभ्य संस्कृतसाहित्यं मानवजीवनस्य परिष्कारायैव यतते, प्राणिनां सौख्योपलब्धये नियतान् कांश्चन गुणान् साधयितुं वर्णयति। जीवनाय प्रार्थना वैदिक-ऋषिभिः सर्वदा विधीयते। सा प्रार्थनेत्थं विलसति -

शतं वर्षाणि यावद् वयं चक्षुर्भ्यां पश्येम।<br>
शतं वर्षाणि यावद् वयं जीवनधारणं कुर्म।।<br>
शतं वर्षाणि यावद् वयं ज्ञानं प्राप्नुम।<br>
शतं वर्षाणि यावद् वयमुन्नतिं कुर्याम।।

अस्याः प्रार्थनायाः प्रकाशका मन्त्रा इत्थं विराजन्तेऽथर्ववेदे -

पश्येम शरदः शतम् ; जीवेम शरदः शतम्।
बुध्येम शरदः शतम् ; रोहेम शरदः शतम्।।
पूषेम शरदः शतम्; भवेम शरदः शतम्।
भूयेम शरदः शतम्; भूयसीः शरदः शतात्।।

(अथर्ववेदे १९। ६७)

यद्यैहिकजीवनस्याभिवृद्धये नो स्याद् निष्ठा प्राचीनानां मनीषिणाम्, तर्ह्यस्याः प्रार्थनायाः संगतिरेव कथमभविष्यत्। जीवने समुल्लास एव वरीयान्, सौख्यप्राप्तिरेव गरीयसी, कल्याणोपलब्धिरेव माङ्गल्यसाधिकेति हेतोः मानवैः स्वजीवने तदर्थमेव प्रयतनं सुदृढं विधेयमिति वर्तते वैदिकी भावना। केचन तदर्थपरिपोषका मन्त्रा अत्रोपन्यस्यन्ते -

वाङ्म आसन् नसोः प्राणश्चक्षुर् अक्ष्णोः श्रोत्रं कर्णयोः।
अपलिता केशा अशीर्णा दन्ता बहु बाह्वोर्बलम्।।
ऊर्वोर् ओजो जङ्घयोर्जवः पादयोः।
प्रतिष्ठा अरिष्टानि मे सर्वात्मा निभृष्टः।।

(अथर्व. १९।६०)

भावार्थः-हे भगवन्, मम मुखे वाक् सर्वदा निविष्टा भवतु। नासिकाभ्यामहं श्वासप्रश्वासं विधातुं समर्थो भवेयम्। नेत्राभ्यां द्रष्टुं पारयाम। कर्णाभ्यां श्रोतुं क्षमामहै। अस्माकं केशा अपलिता भवन्तु। अर्थात् रोगजन्यं शौक्ल्यं मा आपादयन्तु। बाह्वोर्बहु बलं भवतु। ऊर्वोः ओजो भवतु जङ्घयोर्वेगः, पादयोः प्रतिष्ठा सदा भवतु। अस्माकमङ्गानि सर्वाणि रोगरहितानि भवन्तु। अस्माकमात्मा सर्वदा नितरां पुष्टो भवतु।

एषा प्रार्थना भौतिकजीवनस्य समृद्धये विलसतेतराम्। किमत्र प्रार्थयिता भौतिकजीवनमुपेक्ष्य आधिभौतिकजीवन एव लेशतोऽपि स्वीयां निष्ठामाविष्कुरुते। नहि नहि। स तु भौतिकजीवनस्यैव कार्त्स्न्यमभिकाङ्क्षति। सौख्यप्राप्तये तीव्रमभिलाषं स प्रकट-यति। विलोक्यतामन्यो मन्त्र :-

इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे।
पोषं रयीणाम् अरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नाम्।।

(ऋग्वेदे २। २१। ६)

अस्मिन् मन्त्रे इन्द्रमृषिः प्रार्थयते-हे देव! अस्मभ्यं श्रेष्ठानि द्रविणानि देहि।

सौभाग्यमस्मभ्यं देहि, येन धनानां वृद्धिः, शरीराणां नैरुज्यम्, वाचः स्वादुता, दिवसानां सुभगत्वं प्रतिपद्येत। अत्र भौतिकजीवनस्योपकारिणः सर्वान् कामान् प्रार्थयन् ऋषिर्जीवने न कामपि अवहेलनामभिव्यनक्ति।

अथर्ववेदस्य तृतीयकाण्डस्थं त्रिंशं सूक्तं सांमनस्यसूक्तेति यथार्थनाम्नाऽभिधीयते। अस्मिन् सूक्ते विवदमानानामपि पुरुषाणां हृदये सांमनस्यं भवत्विति भव्या कामना विराजते। सांमनस्यशब्दस्यार्थं सायणाचार्यः स्वभाष्य इत्थं विवृणोति-मिथः संप्रीतियुक्ता मनुष्याः संमनुष्यास्तैरेकमानसैर्भूत्वा निवर्तितं यत् तत् सांमनस्यम्-समानमनस्कत्वं सख्यमिति भावः। निखिलेऽस्मिन् संघर्षदौर्मनस्यादिभिः खिलीकृते जगति सांमनस्यस्यैवाद्य वर्तते प्रयोजनम्, येन मानवाः सर्वैः साकं समानमतयो भूत्वा स्वीयमावश्यकं कार्यजातं स्नेहेन प्रेम्णा सहानुभूत्या च निर्वाहयन्तु। अस्माकं पारिवारिकजीवनेऽप्यस्य महद् विराजते प्रयोजनम्। एतदर्थमेवर्षिरुपदिशति सर्वान् मानवान्-

अनुव्रतः पितुः पुत्रो माता भवतु संमनाः।
जाया पत्ये मधुमतीं वाचं वदतु शान्तिदाम्।।

(३। ३०। २)

पुत्रः पितुः स्वकार्यैर्नितान्तमानुकूल्यं भजताम्। माता पुत्रैः साकं समानमनस्काऽनुकूला च भवतु। जाया पत्ये मधुरां शान्तिप्रदायिनीं कल्याणमयीं वाणीं वदतु।

मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा।
सम्यञ्चः सव्रता भूत्वा वाचं वदतु भद्रया।।

(३। ३०। ३)

भ्राता सोदरो भ्रातरं मा द्विष्यात्। दायभागादिनिमित्तेन भ्रातृविषयमप्रियं मा कुर्यात्। स्वसा च स्वसारं भगिनीं मा द्विष्यात्। सर्वे भ्रात्रादयः सम्यञ्चः=समानगतयः, सव्रताः = समानकर्माणो भूत्वा भद्रया कल्याण्या वाचा वागिन्द्रियेण वाचं वदतु=वदन्तु।

अन्यस्मिन् मन्त्रे च पार्थक्यनिराकरणाय संघर्षपरिहाराय चोपदेशः प्रस्तूयते। अधुना त्वन्नस्य समस्यैव सर्वातिशायिनी भूत्वा भारतेऽस्मिन् वर्तते। एतद्विषयेऽपि तैत्तिरीयोपनिषद् भारतीयानस्मान् साधूपदिशति-भो मानवाः! अन्नस्य निन्दां मा कुरुत। यतः प्राणा एवान्नस्वरूपाः सन्ति। अन्नेन शरीरे प्राणसंचारो जायते। अतएव अन्नस्य बहुकरणे यतध्वम्। यदि कश्चिद् अन्नार्थं भवतां समीपमागच्छति, तर्हि तस्य प्रत्याख्यानं नैव विधेयम्। यतोऽन्नमेव ब्रह्म। अन्नस्योपासनेन ब्रह्मण एवोपासना सुसंगता भवति।

अत एवान्नस्य बहुश उत्पादने प्रयतनं विधेयं प्राणिभिरिति भव्या प्रार्थनेत्थं श्रुतौ विलोक्यते-अन्नं न निन्द्यात्। तद्व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादं। प्राणे शरीरं प्रतिष्ठितं। शरीरे प्राणः प्रतिष्ठितः। तदेतद् अन्नमन्ने प्रतिष्ठितम् (३। ७)। अन्नं न परिचक्षीत। तद्व्रतम्। (३। ८)।

अन्नं बहु कुर्वीत। तद् व्रतम्। पृथिवी वाऽन्नम्। आकाशो अन्नादः (३। ९)

न कश्चन वसतौ प्रत्याचक्षीत। तद्व्रतम्। तस्माद् यया कया च विधया बहु अन्नं प्राप्नुयात् (३। १०) - तैत्तिरीयोपनिषद्

यद्यस्माभिरेनमुपदेशमुरीकृत्य कार्यं क्रियेत, तर्हि अमेरिकादेशाद् अन्नप्रापणस्य न क्वापि युक्तिमत्ताऽनुभूयेत। देशे दौर्भिक्ष्यं किं क्वचन कदापि परिदृश्येत? एषामुपदेशाना-मवहेलनयैव भारतवासिनां महती हानिर्भवति भूयान् क्लेशोऽनुभूयते, महच्च दारिद्रयं सर्वत्रावलोक्यते।

अयमत्र निष्कर्षः- संस्कृतशास्त्रं यथा पारलौकिककल्याणायोपदिशति, तथैवैहिकमङ्गल-साधनाय चाऽऽज्ञापयति। केवलमामुष्मिककल्याणमेव सम्पाद्यते संस्कृतभाषाश्रयणेनेति ये वदन्ति ते न कथमपि विविच्य-संभाषिणः। भौतिकजीवनस्य समुत्थानेन मानवाः कल्याण-मैहिकं भजन्ते। तत्कल्याणसाधनायापि प्रयतन्ते संस्कृतशास्त्राणि। अतएव संस्कृतविद्यायाः समुपासनया उभयविधं प्रथमत ऐहिकं तदनन्तरं च पारलौकिकं मङ्गलं साधयितुं क्षमन्ते मानवाः, न केवलं भारतवासिनः, अपि तु सर्व एव जगतीतलवासिनः। इत्थं सति व्यतिकरे कथं न देववाणी समुपास्याऽस्माभिर्भारतीयैः! सकलकल्याणमयी धन्येयं गीर्वाणवाणी सकलैर्मानवैः, विशेषतस्तु भारतीयैः, सावधानेन मनसा आनन्दभरेण च चेतसा ध्येया ज्ञेया चेति महर्षीणामेष आदेशः, एष उपदेशः, एष सिद्धान्तः एषा चोपनिषद् इति दिक्।

अस्माकं भारतवर्षं विद्यते एको विशालदेशः। अस्य देशस्य साहित्यमपि विपुलशरीरमस्ति। भारतीये साहित्ये विद्यते संस्कृतवाङ्मयस्य वैशिष्ट्यम्। संस्कृतवाङ्मयं मानवजीवनस्य पुरुषार्थचतुष्टयसम्बद्धान् सर्वान् विषयान् विस्तरेण वर्णयति। न विद्यते जीवनस्य एतादृक् कोऽपि पक्षः यस्य सूक्ष्मविवेचनं नोपलभ्यते संस्कृतभाषायाः विस्तृते वाङ्मये। संस्कृत भाषैव विद्यते प्राचीनतमा। अस्मिन् साहित्ये मानवजीवनस्य विविधेषु आयामेषु सार्थको विस्तारोऽवलोक्यते। यद्यपि संस्कृतस्य प्राचीने साहित्ये धर्मो मोक्षश्च प्रामुख्यं भजेतेतरां तथापि अर्थस्य कामस्य च समुचितं वर्णनं पर्याप्तरूपेण सचेतसां दृष्टिम् आकर्षति। लौकिकस्य सुखस्य आध्यात्मिकोत्कर्षस्य च उपयोगाय ये ये विषयाः खलु अपेक्षन्ते तेषां समेषां विवेचनं समुपलभ्यते संस्कृतसाहित्ये। एतेषां विषयाणां व्यापकवर्णनेन

गम्भीरचिन्तनेन च विश्वमनीषा सर्वत्र समाकृष्टा विराजते।

संस्कृतसाहित्यस्य सर्वतोमुखं महिमानमाकलय्य सामान्यजनताया उपयोगाय संस्कृत-वाङ्मयस्य बृहदितिहासस्य प्रकाशनाय विशिष्टां योजनां स्वीकरोति उत्तरप्रदेशीयं संस्कृत-संस्थानम्। अयं बृहदितिहासः अष्टादशसु खण्डेषु प्रकाश्यमानो वर्तते। एते खण्डा इत्थं सन्ति-

वेदः, वेदाङ्गम्, आर्षकाव्यम्, काव्यम्, गद्यकाव्यम्, रूपकम्, आधुनिकसाहित्यम्, काव्यशास्त्रम्, न्यायदर्शनम्, वेदान्तदर्शनम्, तन्त्रागमः, नास्तिकदर्शनम्, पुराणम्, धर्मशास्त्रम्, व्याकरणम्, ज्योतिषम्, आयुर्वेदः, राजनीति-संगीतादिशास्त्रम्।

प्रकाश्यमानस्य बृहदितिहासस्य वर्तते अयं प्रथमो वेदखण्डः। अत्र वैदिकवाङ्मयस्य संहितानां, ब्राह्मणानाम्, आरण्यकानाम् उपनिषदां च इतिहासः साङ्गोपाङ्गेन साधु विविच्यते। अस्य खण्डस्याध्ययनेन जिज्ञासूनां पाठकानां समग्रस्य वैदिकसाहित्यस्य स्वरूपपरिचयो भविष्यतीति विश्वसिमि। अस्य खण्डस्य सम्पादको वर्तते डॉ. व्रजबिहारी चौबे महोदयः। श्री चौबे महाभागः सम्प्रति पञ्जाबप्रान्तीय-होशियारपुरस्थवैदिकशोध संस्थानस्य अध्यक्षपदमलङ्करोति। अयं महानुभावः प्रथमखण्डं सपरिश्रमं सम्पादितवानतः धन्यवादार्हो वर्तते।

## वैदिकी प्रार्थना :

आ नो दिवो बृहतः पर्वतादा
सरस्वती यजता गन्तु यज्ञम्।
हवं देवी जुजुषाणा घृताची
शग्मां नो वाचमुशती श्रृणोतु।।

ऋग्वेद- ५। ४३। ११

देवीं वाचमजनयन्त देवा-
स्तां विश्वरूपाः पशवो वदन्ति
सा नो मन्द्रेषमूर्जं दुहाना
धेनुर्वागस्मानुप सुष्टुतैतु

- ऋग्वेद - ८। १००। ११

अत्र सरस्वत्याः प्रार्थना क्रियते। यष्टव्या देवी सरस्वती द्युलोकादागच्छतु। तथा

प्रीणनवतः अन्तरिक्षात् आ गच्छत्। अस्माकमाह्वानं भगवती सरस्वती द्युलोकात् अन्तरिक्षलोकाच्च स्तुतिं सेवमाना उदकमंचती सुखकरीं वाचं स्तुतिं कामयमाना सती श्रृणोतु इति सरस्वत्याः दिव्यां प्रार्थनां विधत्ते। देवाः भगवतीं सरस्वतीं जनयन्ति। तां नानारूपधारिणः पशवो वदन्ति। सा आनन्दं बलमानन्दं च सर्वदैव मानवेभ्यो वितरति। सुन्दरशब्दैः स्तुता वाणी एव वाग् धेनुः अस्माकं कल्याणाय समागच्छतु इति प्रार्थना विधीयते।

## वेदस्य महत्त्वम्-

> पावका नः सरस्वती वाजेभिर्वाजिनीवती।
> यज्ञं वष्टु धिया वसुः।
> चोदयित्री सूनृतानां चेतन्ती सुमतीनाम्
> यज्ञं दधे सरस्वती।।

-ऋग्वेद संहिता, १.३.१०-११

अथाभ्युदयनिःश्रेयससिद्धिहेतुकस्य धर्मस्य परमार्थभूतसिद्धान्तनिचयावगतेः साधनभूता जगतामैहिकामुष्मिकपरममङ्गलसम्पादनाय भगवता करुणावरुणालयेनाविर्भावं प्रापिता भगवन्तो वेदा एवास्माकं धर्मसर्वस्वमिति केषां शास्त्रज्ञानजुषां विदुषां नावगतम्? नैवास्माकं मानवानाम्, अपि तु देवानां पितृणामपि वेद एव सनातनं चक्षुरिति। चतुर्णां वर्णानाम्, त्रयाणां लोकानाम्, चतुर्णाम् आश्रमाणां भूतस्य भव्यस्य भविष्यतश्च सकलस्य वस्तुजातस्य प्रसिद्धिस्थानं भगवती श्रुतिरेवेति मनुवचने कः खलु सचेताः सन्दिग्धे? तथाहि मनुवचनम्-

> पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्।
> अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः।।

(मनु. १२। ९४)

अस्य श्लोकस्य मेधातिथिभाष्ये इत्थं व्याख्या विद्यते 'सनातनं शाश्वतं नित्यम्' अनेन अपुरुषकृतत्वमाह, पुरुषकृतत्वे हि तत्प्रामाण्यात्। प्रमादोऽपीत्यत्र न प्रामाण्यमस्ति। अतः पुरुषगतदोषसद्भावनिश्चयात्, तदभावाद् अपौरुषेयत्वेन वेदः प्रमाणम्। अतो वेदप्रामाण्याद् दृश्यार्थस्य न कश्चन विरोधः ।

अन्यच्च -

**चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक्**
**भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिध्यति।।**

(मनु. ११। ९७)

अस्य मेधातिथिभाष्यमित्थमस्ति-

इयमपि श्रुतिरेव। चातुर्वर्ण्यं वेदात् प्रसिध्यति अधिकारित्वेनावतिष्ठते। 'वसन्ते ब्राह्मणो ग्रीष्मे राजन्य' इति। स्वरूपं तु व्यवहारादवगम्यं सर्ववर्णेषु तुल्यत्वादन्यत्र दर्शितम्। त्रयो लोकाः-'इतः प्रदानं देवा उपजीवन्ति' अनेन त्रैलोक्यस्थितिहेतुत्वं वेदस्य सिद्धम्, वेदमूलकत्वात् स्मृतीनाञ्च।

वेदं विहाय नैवान्यत् किमपि परं साधनं यत् खलु जन्तून् परमार्थभूतां मोक्षपदवीमुपदिशति। मनुरपि अमुमेवार्थं साधु समर्थयति -

**बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम्।**
**तस्मादेतत् परं मन्ये यज्जन्तोरस्य साधनम्।।**

(मनु. १२। ९९)

अत एव वेदार्थतत्त्वज्ञस्य भूयसी प्रशंसा शास्त्रेषूपलभ्यते। वेदार्थज्ञानं नाम मानवानां परमं कर्तव्यम्, प्राधान्यतो ब्राह्मणानाम्। अत एवोक्तमाचार्यैः -

**ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च।**

अतः धर्मस्याधारभूतो वेदः समस्तज्ञानप्रतिपादकत्वाद् अत्यन्तं महनीयोऽस्ति।

कोऽयं वेद इति प्रथमः प्रश्नः, अस्मिन् विषये तिस्रः दृष्टयः संभवन्ति तासु प्रथमा इयमस्ति यत् वेदशब्दो ज्ञानार्थकात् √विद् धातोः निष्पद्यते। विद्याशब्दोऽपि अस्मादेव धातोः निष्पन्नः अत एव मूले विद्यावेदयोः उभयोः शब्दयोः अर्थः समान एवास्ति। अस्मिन् सामान्यार्थे वेदशब्दः आयुर्वेदधनुर्वेदादिशब्देषु प्राचीनकालादेव प्रयुज्यते। द्वितीयायां दृष्टौ वेदशब्दस्य सामान्यज्ञानस्य स्थाने विशेषे पारिभाषिके अर्थे प्रयोगो भवति। 'मन्त्र-ब्राह्मणयोर्वेदनामधेयम्' (आपस्तम्बयज्ञपरिभाषासूत्र ३१) इति प्राचीनया परिभाषया वेदस्य मन्त्रब्राह्मणभागाभ्यां समानरूपेण वेदशब्दस्य प्रयोगः सदा भारतस्य साहित्यिकपरम्परायां प्रचलितो विद्यते। तृतीया दृष्टिः द्वितीयापेक्षया संकुचिता अस्ति। अस्यां दृष्टौ वेदस्य मन्त्रभाग एव वेदो वक्तव्यः।

**तिसृणां दृष्टीनामयमाशयः -**

पुरा 'वेद' शब्दस्य प्रयोगः सामान्यतो ज्ञानस्य विद्याया वा अर्थे भवति स्म। पश्चात् अनेककारणवशात् अयं शब्दः प्राचीनपरम्परातः प्राप्तयोः मन्त्रब्राह्मणयोः कृते प्रयुक्तोऽभूत्। परन्तु मन्त्रभागे ब्राह्मणभागे च अस्ति परस्परं भिन्नता। ब्राह्मणभागः मन्त्रभागमनुगच्छति अतः प्रतिपादनसौविध्याय वेदशब्दप्रयोगः मन्त्रभागाय एव समुचितः।

वेदस्वरूपविषये अस्ति प्राच्यमनीषिषु नैसर्गिको दृष्टिभेदः। पाश्चात्त्य-मनीषिणामाधिभौतिकदृष्टौ वेदः ऋषिप्रणीतः शब्दराशिः। सामान्यग्रन्थवद् वेदोऽपि ग्रन्थ एव, फलतः यः ऋषिः यस्य मन्त्रविशेषेण सम्बद्धः स एव वस्तुतः तस्य रचयिता वर्तते। भाषाशास्त्रदृष्टिप्रभावितानाम्, आध्यात्मिकभावनाऽविश्वस्तानां विदुषां मते ऋषय एव वैदिकमन्त्रकर्त्तारः सन्ति। परन्तु भारतस्य वेदमर्मज्ञाः प्राचीनशास्त्रज्ञाः एकस्वरेण 'ऋषयो मन्त्रद्रष्टारः न तु कर्तारः' इत्यामनन्ति। उक्तं हि यास्केन- 'साक्षात्कृतधर्माण ऋषयो बभूवुः'। ऋषिषु वाक् स्वयमेव प्रविष्टाऽभूदिति श्रुतिः स्पष्टं वक्ति, अतो वाग्द्रष्टृत्वेन ऋषीणाम् ऋषित्वमुच्यते। अस्त्यस्मिन् प्रसंगे व्यासवचनम्-

**युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।**
**लेभिरे तपसा पूर्वमनुज्ञाता स्वयंभुवा।।**

वेदो नित्यः, प्रलये तस्य केवलं तिरोधानं भवति सृष्ट्यादौ च सः तपोनिष्ठानामृषीणामन्तः स्फुरति।

आस्तिक-नास्तिकदर्शनयोः भेदस्य प्रमुखं साधनमपि वेदप्रामाण्यमेव। चार्वाक-जैन-बौद्धादिनास्तिकानां नास्ति वेदवाक्येषु प्रामाण्यबुद्धिः। आस्तिकदार्शनिकानामीश्वरविषये नैकमतानामपि वेदप्रमाण्ये समानभावेन श्रद्धा वर्तते। श्रुतिस्तु परमकरुणापरस्य परमेश्वरस्य दिव्या वाक्, यस्याः श्रवणं तपोनिष्ठैः महर्षिभिः स्वतपःपूतहृदयेषु महत्तपोऽनन्तरं कृतमत एव वेदस्य श्रुतिः इति संज्ञायाः सार्थक्यमस्ति। भारतीय संस्कृतेरितिहासे वेदस्यास्ति नितान्तं गौरवपूर्णं स्थानम्। श्रुतेः सुदृढ़ाधारशिलायामुपरि भारतीयधर्मस्य सभ्यतायाश्च भव्यः प्रासादः प्रतिष्ठितो विद्यते। यथा लौकिकवस्तु-साक्षात्काराय नेत्रस्योपयोगिता तथैवालौकिकवस्तुरहस्यज्ञानाय वेदस्योपयोगिता वर्तते। इष्टप्राप्तेरनिष्टपरिहारस्य चालौकिकमुपायं निर्देष्टुं केवलं वेद एव समर्थः। प्रत्यक्षानुमानाभ्यां सर्वथा दुर्बोधस्योपायस्य ज्ञापनत्वे एव वेदस्य वेदत्वमुरीकृतम्। तथाहि -

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता।।

द्विजस्य द्विजताऽपि वेदाध्ययनमूला। वेदाध्ययनहीनो हि द्विजो शूद्रत्वं गच्छति। उक्तं हि मनुना -

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः।।

(मनु. २। १६८)

वेदस्य सर्वाधिकं धार्मिकं महत्त्वमस्ति। अद्यतने भारते यावन्ति मतानि सन्ति तेषां मूलस्रोतो वेदादेव प्रवाहितं भवति। वेदः ज्ञानस्य तन्मानसं सरो यस्मात् ज्ञानस्य विमला धाराः निःसृत्य न केवलं भारतस्य, अपि तु जगतः प्रदेशान् आप्लवन्ति। भाषा-शास्त्रदृष्ट्यापि वेदस्य महनीयता स्वीक्रियते। वैदिकभाषाध्ययनेन भाषाविज्ञानं सुदृढायामाधारभित्तौ प्रतिष्ठापितम्।

## वेदे विज्ञानम्-

वैदिकतत्त्वेष्वद्यतनविज्ञानादप्युदात्ततरवैज्ञानिकसिद्धान्तानां प्रतिपादनमस्ति। वेदार्थस्योपेक्षाकारणेनेमानि तत्त्वानि प्रायोऽस्माभिर्विस्मृतानि! यज्ञतत्त्वमपि ध्यातव्यम्। यज्ञो हि द्विविधः- (१) एकः स यज्ञो यः प्रकृत्या सततं क्रियते येन चायं संसारः सृष्टः पालितश्च भवति। (२) अपरो यज्ञो लोकव्यवहाराय सर्वथाऽऽवश्यकः। अस्त्यस्य मूलमन्त्रः स्वप्रियतमवस्तुनो देवमुद्दिश्य समाजकल्याणाय समर्पणम्। द्वितीयोऽयं यज्ञः प्रथमयज्ञाश्रित इव भवति। मीमांसाशास्त्रेण द्वितीयो यज्ञ एव मनुष्यस्य कर्तव्यरूपेण विहितस्तत्रैव चाग्रहाधिक्यं प्रदर्शितम्। परन्तु प्रथमविधस्य यज्ञस्य सत्ताया अपलापो भवितुं नार्हति।

अस्त्याधुनिकविज्ञानस्य मूलाधारो विद्युच्छक्तिः। वैदिकविज्ञानस्य मूलाधारः प्राणशक्तिर्विद्यते। इयं प्राणशक्तिर्विद्युच्छक्त्यपेक्षया व्यापकतरा। विद्युच्छक्तिरपि प्राणशक्तेरेवैको भेदः, किन्त्वेवं विधानामनन्तभेदानां समावेशः प्राणशक्तावेव भवति। प्राणानामेव हि भेदा ऋषि-पितृ-देव-गन्धर्वासुरादयः सन्ति येषां सङ्केतो यथास्थानं मन्त्रब्राह्मणेषु प्राप्यते। त एव देवर्षि-पितृप्रभृतयो यज्ञस्य सञ्चालकाः। पाणिनिना 'यज्' धातोः देवपूजा, संगतिकरणं दानञ्चेत्यर्थः कृतः। अस्य स्पष्टोऽयमाशयो यत् प्राणरूपाणां देवानां पूजा, अर्थात्तेषां प्रसादनविधानमेव यज्ञः। एवञ्च संगतिकरणमर्थाद् द्वयोस्तत्त्वयोः सम्मेलनेन नूतन-तत्त्वनिर्माणमपि यज्ञः, अपि च जगतः समेषां पदार्थानामादानप्रदानयोर्या प्रक्रिया प्रचलति

साऽपि यज्ञ एव। यज्ञस्य परिचालकौ देवौ सोमाग्नी। तत्र सोमोऽन्नमिति, अग्निरत्तेति उच्यते। इमे द्वेऽपि तत्त्वे व्यापके- 'अग्निषोमात्मकं जगत्'। अग्निः सततं सोममत्ति स्वरूपे च परिणतं करोति। अग्नौ हि नैरन्तर्येण सोमस्याहुतिर्भवति। यथा हि सूर्योऽतिविशाल एकोऽग्निपिण्डः। स हि सदा प्रज्वलति। तस्मादनन्ततेजांसि अग्नयो वा समग्रेऽपि ब्रह्माण्डे प्रसरन्ति, किन्त्वसंख्यानग्नीनुत्क्षिपन्नपि भास्करः कथन्न क्षीणतां यातीति शङ्काया अस्त्युत्तरं श्रुतौ-सोमेनादित्या बलिनः इति। अयमाशयः- सूर्ये सोमस्यानन्ता आहुतयः भवन्ति सोमश्च सततमग्निरूपेण परिणमते।

अतः समस्ते विश्वे प्रसारणेन सूर्यस्याग्निः क्षीयते किन्तु सोमस्य आहुत्या नवोऽग्निरुत्पद्यते। इयमेवाग्निप्रक्रिया सर्वेषु पदार्थेषु सदा प्रचलिताऽस्ति।

आर्यदर्शनेषु पञ्चमहाभूतसिद्धान्तः स्वीक्रियते। अस्माकं दर्शनक्षेत्रे पृथिव्यप्तेजोवायुवाकाशेति पञ्च मूलभूततत्त्वानि स्वीकृतानि सन्ति। एषां पञ्चानामपि विकास एकस्मादेव मूलतत्त्वादभूत्। निखिलमपि दृश्यं जगदेकस्यैव मूलतत्त्वस्य विस्तार इति वैदिकविज्ञानं स्फुटं प्रकटयति। आदौ वर्तमानविज्ञानविद्भिर्भारतीयः पञ्चभूतसिद्धान्त उपहसितः तैश्च पृथिव्यादिकं न भौतिकं तत्त्वमपितु यौगिकमिति प्रतिपादितम्। तेषामयं विचारः स्थूलपृथिव्यादिविषयक एव। पञ्चभूतानां या विविधा अवस्थाः अस्माकं दर्शने स्वीकृताः तासु तेषां विदुषां दृष्टिपातो नाभूत्। जलस्य अम्भः, मरीचिः, मरः आपः इति चतस्रः अवस्थाः श्रुतिषु स्पष्टाः याः क्रमशः स्थूलतां गताः। अनेनैव प्रकारेण पृथिव्या अपि अष्टौ अवस्थाः सन्ति, परन्तु ताः अवस्थाः अविचार्यैव वर्तमानकालिकाः वैज्ञानिकाः पञ्चभूतसिद्धान्तमुपहसन्ति। भारतीयशास्त्रमपि स्थूलावस्थाः यौगिका इति स्पष्टं स्वीकरोति। ऋग्वेदे 'अप्सु सोमो अब्रवीत्' इत्यादिषु बहुषु मन्त्रेषु स्थूलजलान्तः स्थितयोरग्निसोमयोर्द्वयोः तत्त्वयोः सत्ता निगदिता सोमस्य चान्तो 'भेषज' नामक बहुतत्त्वानां समोवेशोऽप्युक्त एव। आधुनिकविज्ञाने जले 'हाइड्रोजन' 'आक्सीजन' इति संज्ञकस्य वाष्पद्वयस्य योगः कथितः। वैदिकविज्ञानमग्निसोमयोर्योग इति ब्रूते। अत्र हि भाषाभेदेन शब्दभेदः वस्तुत उभयोरपि सिद्धान्तः समानतामेव भजति।

अद्यावधि विज्ञानेन हाइड्रोजन-आक्सीजनादिकं मौलिकन्तत्त्वमिति स्वीकृतम्, अर्थान्नैतेषु सम्मिश्रणं परिवर्तनं वा संभवति। एतान्यपि तत्त्वानि यौगिकानि संयोगजानि वर्तन्ते येषां नाम वैदिकविज्ञाने 'विराट्' इति वर्तते। यद्वस्तु इन्द्रियैर्यन्त्रैर्वा ज्ञायते तद् 'विराट्' इत्युच्यते। विराज उत्पादको यज्ञः अतो यज्ञ एव समेषां पदार्थानामन्तरात्मा। मूलभूतस्य यज्ञस्योत्पादकः पुरुषः स च श्रुतौ गीतायाञ्च क्षराक्षराव्ययरूपस्त्रिविधः प्रोक्तः। एषु त्रिषु

पूर्वापेक्षयोत्तरः सूक्ष्मोऽग्रिमश्च पूर्वानुप्रविष्टः। अव्ययाख्यस्यापि पुरुषस्य मूलं परात्परः तस्यापि परात्परस्य मूलं यो निर्विकल्पः पुरुषः स केवलमध्यात्मदृशैवावगन्तव्यः, नहि तत्र विज्ञानस्य गतिः।

विज्ञानमपि सम्प्रति स्वीकरोति- यत् शताधिकं तत्त्वमद्ययावदाविस्कृतन्तत्र मौलिकम्। मौलिकन्तु केवलम्-इलेक्ट्रोन, प्रोटोन इति तत्त्वद्वयम्। अनयोरेव तत्त्वयोरलौकिक्रियोगेन विभिन्नानि तत्त्वानि जायन्ते। इदमपि तत्त्वद्वयं मूलत एकस्यैव तत्त्वस्य विकासनमिति सिद्धम्। अतएव भारतीयदर्शनस्यैकतत्त्ववादे विज्ञानमपि पर्यवसितमिति आपाततः प्रतीयते। परन्तु भारतीयदर्शनेन यदेकतत्त्वमुच्यते तत्तु अतीव दूरवर्ति। इलेक्ट्रोनप्रोटोनयोर्यल्लक्षणं निश्चितं तद्धि- अनयोरेकोऽणुः स्थिरो द्वितीयो हि तं परितः सततं भ्रमति। अस्य लक्षणस्यापूर्वं साम्यं साश्चर्यं वेदे दृश्यते।

शतपथब्राह्मणे वेदेभ्योऽस्य विश्वस्योत्पत्तिवर्णनमेवमस्ति- 'यजुः' शब्दो 'यत्' 'जूः' इति द्वयोः शब्दयोः सम्बन्धेन निष्पन्नोऽस्ति। तत्र निरन्तरगतिशील इति 'यत्' शब्दार्थः, स्थिर इति 'जूः' शब्दार्थः। आभ्यां द्वाभ्यामेव तत्त्वाभ्यां समस्तानि वस्तूनि विरच्यन्ते। इत्थं हि यत् तत्त्वं विज्ञाने 'इलेक्ट्रान' - 'प्रोटान' शब्दाभ्यामुच्यते तदेव तत्त्वं शतपथब्राह्मणे 'यत्' - 'जूः' शब्दाभ्यां निगद्यते। शतपथब्राह्मणेऽग्रे 'यत्' शब्दस्य वायुः, 'जूः' शब्दस्य च आकाशमिति अपरं नामद्वयं वर्णितमस्ति। एवं हि वर्तमानं विज्ञानं यत्र गत्वा विश्राम्यति तदपि भारतीय पञ्चभूतविज्ञानप्रक्रियायाः भौतिकं तत्त्वमेव तच्च 'विराट्' तत्त्वान्तर्गतमिति सिध्यति।

'ईथर' तत्त्वविषये सन्ति वैज्ञानिकाः परस्परं विवदमानाः। तेषु केचन तत् तत्त्वं सर्वेषां तत्त्वानामाधार इत्यामनन्ति अन्ये च तस्य नामापि न सहन्ते। वैदिकविज्ञाने देवादयः प्राणविशेषा इति मया पूर्वमेवोक्तम्। तेषु देवेषु प्रधानदेव इन्द्रः स हि प्राणरूपः, प्राणरूपं तमिन्द्रमेव वैज्ञानिका 'ईथर' इति कथयन्ति। इन्द्रस्य चतुर्दशभेदेषु 'ईथर' इत्येको भेदोऽभिहितः। विद्युच्छक्तिरपीन्द्रस्यैवैकं रूपम्। इत्थं हि येषां तत्त्वानां विषये वैज्ञानिकाः अधुनाऽपि संदिग्धास्तेषां सिद्धान्ततया पूर्णनिर्णयो वैदिकविज्ञानेऽभूदित्यत्र नास्ति सन्देहलेशप्रसङ्ग इत्यलं विस्तरेण।

## वैदिकधर्मस्य वैशिष्ट्यम्

धर्मो विश्वस्य जगतः प्रतिष्ठा-अथ धर्मस्य स्वरूपं, तद्वैशिष्ट्यं प्राणिनां कृते तदुपयोगं च व्याख्यास्यामः। 'धृ' धातोर्निष्पन्नोऽयं 'धर्म' शब्दो धारणार्थमभिव्यनक्ति। विश्वस्मिन्

जगति सर्वेषां पदार्थानां द्रव्याणां च संयोजनेनैकत्र धारणेन च जीवननिर्वाहः। तदर्थं धर्मः प्रभवति। सूर्यश्चन्द्रमास्तारामण्डलं पृथिवी च परस्परोपकार्योपकारकभावेन सह धृतानि परमेश्वरेण निर्दिष्टानि स्वविशिष्टानि कार्याणि कर्तुं प्रभवन्ति। समाज एव मानवानां स्वोत्कर्षसाधनायै सन्ततमपेक्ष्यते तज्ज्ञैः। विभिन्नमानसवृत्तीनां व्यष्टिभूतानां मानवानामेकत्र स्थित्यापादनेनैव समाजस्य समाजत्वं नाम। अत एव समाजस्य धर्म एव प्रतिष्ठा। न केवलं मानवसमाजस्य, प्रत्युत विश्वस्य जगतः प्रतिष्ठा धर्म एव। तथा च श्रुतिवचनं समुपजृम्भते-

**'धर्मो विश्वस्य जगतः प्रतिष्ठा'।**

'चोदनालक्षणोऽर्थो धर्मः'। चोदना नाम वेदप्रतिष्ठितैः मन्त्रैः प्रतिपाद्यमाना विधिरूपा प्रेरणैव। धर्मस्य प्रतिपादकत्वं नाम वेदे एव मुख्यतया उपयुज्यते। अत एव वेदस्याकुण्ठितां शक्तिं सम्प्रदायविदो दर्शयन्ति। तथा शाबरभाष्ये (१।१।२) - 'चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थं शक्नोत्यवगमयितुम्' इति। वेदस्य प्रामाण्यत एव स्मृतिलोकप्रसिद्ध्यादीनामपि प्रामाण्यं दुर्निवारं स्मृतेर्वेदमूलकत्वात् लोक-प्रसिद्धेस्तदुभयमूलकत्वात् च। ततश्चापौरुषेयेण वेदेन प्रतिपादितत्त्वात् धर्मस्याप्यपौरुषेयता दुर्निवारा। यथार्थतस्तु न हि देशेन न वा कालेन धर्मः परिच्छिद्यते-देशकालाभ्यामपरि-च्छिन्नत्वं नाम धर्मत्वम्।

**धर्मस्य लक्षणम्-'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः'।**

श्रुत्या यानि कर्माणि विधिरूपेण विहितानि, तानि धर्म इति कथ्यन्ते। यानि च कर्माणि निषिध्यन्ते श्रुत्या, तानि अधर्म इति मन्यन्ते, धर्माधर्मव्यवस्थायां वेदस्य परमप्रामाण्यात्। तथा च विद्यते श्रीमद्भागवते व्यासस्य गम्भीरार्थप्रतिपादकं वचनम् -

**वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः।**
**वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुम।।**

(भाग. ६।१।४०)

भगवत्प्रणीतत्त्वेन धर्मस्य ज्ञाता बोद्धा च भगवानेक एव, न ऋषयः, न वा देवाः, न वा सिद्धाः, कुतो मनुष्या विद्याधरचारणादय इति प्रतिपादितं श्रीमद्भागवते -

**धर्मं तु साक्षाद् भगवत्प्रणीतं न वै विदुर्ऋषयो नापि देवाः।**
**न सिद्धमुख्या असुरा मनुष्याः कुतश्च विद्याधरचारणाद्याः।।**

(भाग. ६।३।१९)

धर्मस्याश्रयणेनैव इहलोके प्राणिनामभ्युदयः सञ्जायते, अमुष्मिन् लोके निःश्रेयसरूपा मुक्तिश्चोपलभ्यते। धर्मस्य धारकत्वं श्रीवेदव्यासो नानावचनैर्महाभारते प्रतिपादयति -

धारणाद् धर्म इत्याहुर्धर्मेण विधृताः प्रजाः।
यः स्याद् धारणसंयुक्तः स धर्म इति निश्चयः।

(महा. शान्ति १०६ । ११)

## धर्मस्य वैशिष्ट्यम्-

अधिकारिभेदस्वीकरणं प्रथमं तावद् वैशिष्ट्यं विद्यते धर्मस्य, मानवानां बुद्धिस्वभावादीनां नितान्तं भिन्नत्वात्। नहि सर्व एव मानवा एकस्यैव धर्मोपदेशस्यानुकूल्यं भजन्ते। योग्यतामनुसृत्य निर्दिष्टो हि धर्मः सर्वदा हितावहः श्रेयस्करश्च भवति। नहि मनुजाः समानयोग्यताभाजोऽवलोक्यन्ते, सत्त्वादीनां च तत्स्थानां गुणानां तत्र तत्र परस्परमुपचयापचयत्वेन तेषां मानसवृत्तीनामनेकरूपत्वाच्च।

कर्मसिद्धान्तस्वीकारश्च विद्यते द्वितीयं वैशिष्ट्यम्। लोकेऽस्मिन् प्रत्यहमनुभूयमान-दशावैषम्यस्यानेनैव सिद्धान्तेन सामञ्जस्यं घटते। केचन आढ्याः सुखेनैव स्वं कालं यापयन्ति; अपरे च हीनाः क्लेशेनैव स्वं समयं नयन्ति। को हेतुरस्य दशावैषम्यस्य? न हि सर्वेषां जनके परमेश्वरे नैर्घृण्यं कल्पयितुं पार्यते; प्राणिनां कर्मानुकूल्यादेव दशाविपर्ययस्य हेतुं विनिश्चेतुं सुशकत्वात्। वैशिष्ट्यद्वयसमाश्रयणे हि सर्वासां समस्यानां समाधानं कर्तुं पार्यते विद्वज्जनैः। अन्येषु मतेस्वधिकारिभेदस्वीकरणाभावात् समान एवोपदेशस्तन्मतानुयायिनां निखिलानामुपयोगाय विधीयते। एष तु नितान्तमनौचित्यं भजते। न हि सर्व एव तन्मतावलम्बिनः समानबुद्धिवैभवशीला विलोक्यन्ते, येनोपदेशस्य सामान्यरूपमङ्गीक्रियेत। कर्मसिद्धान्तस्वीकाराभावे विश्वस्मिन् प्रत्यहं प्रतिक्षणं चानुभूयमानो व्यवहारभेदो न कथमपि सत्तर्केण समर्थयितुं पार्यते। अतएव वेदप्रतिपाद्यधर्मस्य माहात्म्यं विद्वज्जनैरुरीकरणीयमेवेति, धर्मोपदेशविषये ऽधिकारिभेदस्वीकरणात् कर्मसिद्धान्तसमर्थनाच्चेति।

## वैदिकधर्मस्याद्वितीयत्वम्-

धर्मस्त्वेक एव। स च चोदनाप्रतिपाद्यो वैदिको धर्मः। अन्ये तु धर्मशब्देन प्रायशो व्यपदिश्यमाना अपि सम्प्रदाया एव। सम्+प्रोपसर्गाभ्यां युक्तस्य दाधातोः 'आतो युक् चिण्कृतोः' (७।३।३३) इति सूत्रेण घञ् प्रत्यययोगेन निष्पन्नोऽयं 'सम्प्रदाय' शब्दो

गुरुपरम्परागतं सदुपदेशं शिष्टपरम्परावतीर्णोपदेशं च सम्यग् व्यनक्ति। तथा च महाकविना माघेन 'सम्प्रदाय' शब्दोऽयं सुष्ठु प्रायोज्यतैतस्मिन् पद्ये -

सम्प्रदायविगमादुपेयुषीरेष नाशमविनाशिविग्रहः।
स्मर्तुमप्रतिहतस्मृतिः श्रुतीर्दत्त इत्यभवदत्रिगोत्रजः।।

(शिशुपालवधे, १४। ६६)

एवं च केनापि विशेषगुणगौरवशालिना आचार्येण कालिकदैशिकदशामनुरुध्य कस्मिन्नपि विशिष्टे भूभागे क्रियमाणः सदुपदेशः सम्प्रदायशब्देन व्यवह्रियते विद्वद्भिः। सार्वभौमत्वं सार्वकालिकत्वं चाद्वितीयत्वं च यथा धर्मस्य द्योतकं तत्त्वम्, तथैव देशकालसम्बन्धतः कादाचित्कत्वमनुभूयमानत्वं सम्प्रदायस्येति तयोः पार्थक्यरेखाविभागः 'रिलीजन' शब्दः सम्प्रदायमेव स्ववाच्यत्वेनाभिधत्ते। सम्प्रदायेष्वेव हिब्रूरिव्रष्टीयमोहम्मदीयादीनि विश्रुतानि धार्मिकमतान्यन्तर्भवन्तीति सुधीभिर्निभालनीयम्। त एतेऽनेकसम्प्रदायाः सनातनवैदिक-धर्मस्यैवाङ्गभूताः, तद्विवृतैकदेशस्यैव प्राधान्येनोपदेशकरणात्। भ्रातृभावः परस्परं मैत्री-भावना, प्राणिनां परस्परप्रेमानुबन्धिनी सेवा-इत्यादयो निखिलमतेषूपलभ्यमाना धर्मगुणाः सनातनधर्मस्यैवाङ्गभूताः। एते सम्प्रदाया अपि परमपुरुषार्थभूतमोक्षस्य सार्थकत्वेन यदि धर्मशब्देन लोके व्यवह्रियन्ते, तत्तूपलक्षणमात्रम्। परम्परया मोक्षसाधकत्वात् तेषु धर्मशब्दो ह्युपचरितवृत्तिर्द्रष्टव्यः।

## वैदिकधर्मस्य निखिलमतोपजीव्यत्वम्-

वैदिकधर्म एव विश्वेषामपि मतानां सम्प्रदायानां च जनको विद्यते। सत्यास्तेयशौचादीनां सदाचारस्याङ्गानामुपलब्धिरेव नैतत्सिद्धान्तस्वीकरणे हेतुरूपतामाधत्ते, अपि तु तत्स्वीकृतपरमेश्वरस्याभिधानमपि वेदादेव गृहीतमिति तुलनात्मकभाषाविज्ञानपद्धतिमनुरुध्य ध्रुवं सत्यापयितुं पारयामः। तथा च हिब्रूमते (यस्य प्रतिपादनम् 'ओल्ड टेस्टामेण्ट' नाम्ना प्रख्यातस्य बाइबिल ग्रन्थस्यादिमो भागो विशदं विधत्ते) परमेश्वरस्य 'यहोवा' 'यह्वेह-यह्वे' इत्यादि विविधाकारैः समुदीर्यमाणमभिधानं वेदेषु देववाचक 'यह्व' नामैव सर्वात्मना अनुसरतीति भाषासमीक्षणसिद्धान्तः। 'यह्व' शब्दस्य प्रयोगा ऋग्वेदीय विविधमन्त्रेषूपलभ्यन्ते-

विश्पतिं यह्वमतिथिं नरः सदा

(ऋ.वे.३। ३ । ८)

प्र वो यह्वं पुरूणां विशां देवयतीनाम्।
अग्निं सूक्तेभिर्वचोभिरीमहे यं सीमिदन्य ईळते।।

(ऋ.वे. १। ३६ ।१)

वैदिकोऽयं 'यह्व' शब्दो निघण्टौ (३।३) महन्नामसु पठितो महदित्यर्थं सूचयति। 'यह्व' इति महतो नामधेयम्। 'यातश्च हूतश्च भवति' (८।८) इति निरुक्तं तदेव समर्थयति। 'या' 'ह्वे' इति धातुद्वयसंयोगात् 'गेहे कः' (३।१।१४४) इति सूत्रेण बाहुल-कात् भूते 'क' प्रत्ययो ह्वयतेः सम्प्रसारणभावश्चेति वदति स्कन्दस्वामी। यातश्चासौ प्रार्थिभिर्हूतश्चेति तदर्थः। तथा च याजकैर्देवोऽयं सर्वथा गम्यते, प्रार्थनास्वीकरणार्थं च बहुशो हूयते इति महत्त्वावच्छिन्नता तस्मिन् ध्रुवं जागर्ति।

हिब्रूमते परमेश्वरस्याभिधानं रोमन लिप्या Iehovalh इति यद् विश्रुतम्, तत्र J (जे) इत्यस्योच्चारणं यकार एवेति भाषाविदः। आदौ नितान्तं पावित्र्याधानहेतोः परमेश्वरस्य नामोच्चारणं न कस्यापि समुचितमासीत्, परन्तु गच्छता कालेन तस्याभिधानं 'यह्वे' 'यह्वेह' इत्येव बभूव। अस्य नाम्नोऽर्थः परममहानित्येव। अस्य शब्दस्य व्युत्पत्ति-विषयेऽपि सन्दिह्यते विद्वद्भिः 'हावाह' हिब्रूधातोर्निष्पन्नोऽयं शब्दः स्वयम्भूरित्यर्थं प्रकटयति।[1] परन्तु व्युत्पत्तिरियं नहि सर्वैर्भाषाविद्भिरनुमन्यते। वैदिक 'यह्व' शब्द-प्रतिरूपकोऽयं शब्द इति ममाभिप्रायः।

ख्रिष्टीयमते परमेश्वरस्याभिधानं 'गाड'[2] इति। शब्दोऽयं प्राचीनट्यूटानिकभाषायां प्रयुक्तात्[3] 'घूतो-म' शब्दान्निष्पन्नः। घूतो-म शब्दस्तु संस्कृत 'हूतम्'- शब्दान्निष्पन्न इति वदति प्रामाणिकमूर्धन्यो महनीय-आक्सफोर्ड-आङ्ग्लभाषाकोशः। होमादिभिर्यो हूयते, प्रार्थनास्वीकरणार्थं च य आहूयते साधकैरित्यर्थमभिव्यञ्जन्नयं शब्दः 'हु' 'ह्वे' इत्युभयधातुभ्यां स्वनिष्पत्तिं भजते।

इत्थं 'गाड' शब्दस्य मूलभूतोऽर्थो विद्यते 'यज्ञेनोपास्यो देवः' 'हवनादिभिः पूजितः परमेश्वरः,' भक्तैः स्वमनोरथपूर्तिकामुकैः सेवितः सर्वशक्तिमान् भगवान् इति। आङ्ग्लशर्मण्यभाषादिषु 'गाड' शब्दस्य आदिपमक्षरं गकार इति प्राचीनट्यूटानिक- भाषायां घकारं स्वनिष्पत्तिवर्णत्वेन परिगृह्णाति। स च संस्कृतभाषायां हकारादेव निष्पन्नः। संस्कृते हुतम् अथवा हूतम्; प्राचीनट्यूटानिकभाषायाम् 'घूतो-म', आङ्ग्लभाषायाम् 'गाड';

---

1. Hawah = to be, to exist
2. God
3. Ghu to-m

जर्मनभाषायां च 'गाट'[1] इति। इत्थं च वर्णपरिवर्तनप्रणाली भाषाशास्त्रिभिर्नितान्तमभिमताऽस्य समीकरणस्य हेतुभावमुपैति इति भाषाविद्भिर्निपुणं विवेचननीयम्।

**अयमत्र निष्कर्षः-** परमेश्वरवाचको हिब्रूभाषाया 'यह्वे' शब्दः ख्रिष्टीयधर्मे च प्रयुक्तो 'गाड' शब्दः उभावप्येतौ संस्कृतमूलादेव निष्पन्नाविति। निरुक्तशैलीमनुरुध्य वक्तुं पारयामो वयं यदेतावप्यवैदिकत्वेनाभासमानौ सम्प्रदायौ परमेश्वरस्य महनीयतानिधानहेतोर्वैदिकशब्दावेवाधारकत्वेन स्वीकुर्वत इत्यतो जागर्ति वैदिकभाषायास्तुलनात्मकधर्मसमीक्षणविषये कोऽपि महिमा।

## वैदिकधर्मस्य शिक्षास्वरसः-

नानाविधेषूपदेशेषु धर्मस्य पुरुषार्थचतुष्टयस्य सामञ्जस्यं हि नाम मूर्धन्यतामाप्नोति। त्रिवर्गे धर्मार्थकामरूपे धर्मस्यैव प्राधान्यमङ्गीकुर्वन्ति धर्मशास्त्रविदो मनीषिणः। धर्मानुकूलः कामो धर्मानुकूलोऽर्थश्च वैदिकधर्मे समीहितौ। न हि धर्मेण विरुद्धोऽर्थः कामो वा साफल्यं भजते।

धर्मानुकूलः कामस्तु साक्षाद् भगवद्विभूतित्वेन परिगण्यते श्रीमद्भगवद्गीतायाम्- 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' इति वदता श्रीकृष्णेनापि। लोकोपकारित्वाद् जीवननिर्वाहसाधकत्वाद् निखिलमानवाभीष्टत्वाच्चार्थकामौ न कथमपि वर्जनीयतामाप्नुतः, परन्तु धर्मेणाविरुद्धावेव सन्तावभ्यर्हणीयतां भजेते इति शास्त्रकाराणां हार्दम्। अत एव धर्मार्थकामानां परस्परोपकारित्वादेव संतुलिताचरणे शास्त्रस्य तात्पर्यम्, न तु तेषां विरुद्धाचरणे। तथा च व्यासस्य वचनम् -

> **धर्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स नरो जघन्यः।**
> **द्वयोस्तु दाक्ष्यं प्रवदन्ति मध्यं स उत्तमो योऽभिरतस्त्रिवर्गे।।**

**पद्यघटितसममित्यस्यार्थः-** अनासक्तिभावेन परस्परसंतुलितरूपेणेति। स नरो जघन्यो भवति यः खल्वेकस्मिन् कस्मिन्नपि-धर्मेऽपिआसक्तः स्यात्। अर्थकामौ विहाय धर्मासक्तिरपि नो स्वीकार्या मानवैः। अर्थकामाभ्यां साकमविरुद्धभावेन धर्मस्याचरणे शास्त्रकाराणामाग्रहः, न त्वर्थकामाभ्यां वर्जिते धर्माचरणे इति निपुणं शास्त्रमर्म निभालनीयं भव्यैः। वर्तमाने कालेऽर्थकामौ धर्मेण नितान्तं विरुद्धौ साक्षात्क्रियेते। अतएव तौ त्याज्यौ। धर्माविरुद्धौ चेत्, नितान्तं ग्राह्याविति वैदिकशास्त्राणां स्पष्टं तात्पर्यम्।

आधुनिकः साम्यवादो भारतीयधर्मानुकूल एव। अन्योपमर्दनपूर्वकं स्वाभीष्टार्थोपलब्धिर्हि

---

1. Gott.

साम्प्रतिकी व्यवस्था लक्ष्यते पाश्चात्यदेशेषु, परन्तु नैषा स्थितिः साम्यवादेन साकमौचित्यं भजते। एतद्विषये श्रीमद्भागवतस्य वचनमेतन्नितान्तं महत्त्वमाधत्ते-

यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम्।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ।। इति।

एषा स्वत्वमीमांसा। यावता द्रव्येण प्राणिनामुदरं भ्रियेत तावत्येव द्रव्ये तेषामधिकारः, उदरपूरणार्थकत्वाद् द्रव्यस्य। ततो योऽधिकं स्वत्वं द्रव्यस्याभिमन्यते स स्तेनः, चौर एव। स च समाजे दण्डमर्हति। अनधिकृतस्य द्रव्यस्य च स्वात्मापादनं हि चौर्यं नाम। तत्तु स्वोदरपूर्तिसमधिकद्रव्येऽधिकारमानिनि पुरुषेऽपि नितान्तं समन्वेति। अतएव तस्मिन् चौर्यभावो दुर्निवारः। एषा स्वत्वमीमांसा नैसर्गिकी औचित्यपूर्णेति सैव साम्प्रतमादरणीया मानवैः। यथार्थतः साम्यवादस्तु भारतवर्ष एव स्ववास्तविकं स्वरूपमाधातुं प्रभवति, नान्येषु भेदप्रभेदवादिषु पाश्चात्यदेशेषु। इत्थं च धर्मानुकूलत्वेऽर्थकामयोर्नहि कुत्रापि केनचित् सङ्घर्षः, न क्वापि मतविरोध इति तौ नूनमुपास्यौ। कर्तव्यस्य पालनम्, न त्वधिकाराय सङ्घर्षः, मानवानां मिथो भ्रातृभावः, न तु परस्परं वैमनस्यम्, युद्धानामुपशमः, न तु पारस्परिकः कलहः-एतत् सर्वं साम्प्रतं वैदिकधर्मादेवोपगन्तुं पार्यते, नान्यतः कस्मादपि धर्माभासरूपात् सम्प्रदायात्। अतः स एवोपास्यः। तस्योपासने सर्वेषां मानवानामैहिक-फलस्योदयः, आमुष्मिककल्याणस्योपलब्धिर्नूनं भविता। अतो वैदिको धर्मो नितरां भजनीय इति दिक्।

वागीश्वरी जयन्ती
वसन्त पञ्चमी
वि.सं. २०५२
२५। १। ९६

बलदेव उपाध्यायः
विद्या विलासः
रवीन्द्रपुरी
वाराणसी

# भूमिका

## संस्कृत-साहित्य की मूल प्रवृत्ति

साहित्य समाज का दर्पण होता है। समाज जिस प्रकार का होगा वह उसी भाँति साहित्य में प्रतिबिम्बित रहता है। समाज के रूप-रंग, वृद्धि-ह्रास, उत्थान-पतन, समृद्धि-दुरवस्था के निश्चित ज्ञान का प्रधान साधन तत्कालीन साहित्य होता है। इसी प्रकार साहित्य संस्कृति का प्रधान वाहन होता है। संस्कृति की आत्मा साहित्य के भीतर से अपनी मधुर झाँकी सदा दिखलाया करती है। संस्कृति के उचित प्रसार तथा प्रचार का श्रेष्ठ साधन साहित्य ही है। संस्कृति का मूल स्तर यदि भौतिकवाद के ऊपर आश्रित रहता है, तो वहाँ का साहित्य कदापि आध्यात्मिक नहीं हो सकता और यदि संस्कृति के भीतर आध्यात्मिकता की भव्य भावनाएँ हिलोरें मारती रहती हैं, तो उस देश तथा जाति का साहित्य भी आध्यात्मिकता से अनुप्राणित हुए बिना नहीं रह सकता। साहित्य सामाजिक भावना तथा सामाजिक विचार की विशुद्ध अभिव्यक्ति होने के कारण यदि समाज का मुकुट है, तो सांस्कृतिक आचार तथा विचार के विपुल प्रचारक तथा प्रसारक होने के हेतु, संस्कृति के सन्देश को जनता के हृदय तक पहुँचाने के कारण संस्कृति का वाहन होता है।

संस्कृत-साहित्य का इतिहास पूर्वोक्त सिद्धान्त का समर्थक है। संस्कृत-साहित्य भारतीय समाज के भव्य विचारों का रुचिर दर्पण है। भारतवर्ष में सांसारिक जीवन के उपकरणों का सौलभ्य होने के कारण भारतीय समाज जीवन-संग्राम के विकट संघर्ष से अपने को पृथक् रखकर आनन्द की अनुभूति को, वास्तविक शाश्वत आनन्द की उपलब्धि को अपना लक्ष्य मानता है। इसलिए संस्कृत-काव्य जीवन की विषम परिस्थितियों के भीतर से आनन्द की खोज में सदा संलग्न रहा है। आनन्द सच्चिदानन्द भगवान् का विशुद्ध पूर्ण रूप है। इसीलिए संस्कृत-काव्य की आत्मा रस है। रस का उन्मीलन-श्रोता तथा पाठक के हृदय में आनन्द का उन्मेष-ही काव्य का अन्तिम लक्ष्य है। संस्कृत-आलोचनाशास्त्र में औचित्य, रीति, गुण तथा अलंकार आदि काव्यांगों का विवेचन होने पर भी रस-विवेचन ही मुख्यतया प्रतिपाद्य विषय है। भारतीय समाज का मेरुदण्ड है गृहस्थाश्रम; अन्य आश्रमों की स्थिति गृहस्थाश्रम के ऊपर ही निर्भर है। फलतः भारतवर्ष का प्रवृत्तिमूलक समाज गृहस्थ-धर्म को पूर्ण महत्त्व प्रदान करता है और इसीलिए संस्कृत-साहित्य में गार्हस्थ्य धर्म का चित्रण सांगोपांग, पूर्ण तथा हृदयावर्जक रूप से उपलब्ध होता है। संस्कृत-साहित्य का आद्य

महाकाव्य वाल्मीकीय रामायण गार्हस्थ्य धर्मकी धुरी पर घूमता है। दशरथ का आदर्श पितृत्व, कौशल्या का आदर्श मातृत्व, सीता का आदर्श पत्नीत्व, भरत का आदर्श भ्रातृत्व, सुग्रीव का आदर्श बन्धुत्व और सबसे अधिक रामचन्द्र का आदर्श पुत्रत्व भारतीय गार्हस्थ्य धर्म के ही विभिन्न अंगों के आराधनीय आदर्शों की मधुमय मनोरम अभिव्यक्ति हैं।

## साहित्य और संस्कृति

संस्कृत-साहित्य भारतीय संस्कृति का प्रधान वाहन रहा है। यदि संस्कृत के काव्यों में संस्कृति अपनी अनुपम गाथा सुनाती है, तो संस्कृत के नाटकों में वह अपनी कमनीय क्रीड़ा दिखाती है। भारतीय संस्कृति का प्राण आध्यात्मिक भावना है। त्याग से अनुप्राणित, तपस्या से पोषित तथा तपोवन में संवर्धित भारतीय संस्कृति का रमणीय आध्यात्मिक रूप संस्कृत भाषा के ग्रन्थों में अपनी सुन्दर झाँकी दिखलाता हुआ सहृदयों के हृदय को बरबस खींचता है। महर्षि वाल्मीकि तथा व्यास, कालिदास तथा भवभूति, बाण तथा दण्डी पाठकों की हृदयकली को विकसित करने वाले मनोरम काव्य की रचना के कारण जितने मान्य हैं, उतने ही वे भारतीय संस्कृति के विशुद्ध रूप का चिन्तन करने के कारण भी आदरणीय हैं। संस्कृत-कवि को राजा-महाराजाओं के दरबार की हवा खाने वाला चापलूस जीव मानने की भ्रान्त धारणा साहित्य के ऊपरी आलोचकों में भले ही फैली रहे, परन्तु संस्कृत भाषा का कवि संकीर्ण विचारों का व्यक्ति न था, जो अपने परिमित विचारों की कोठरी में अपना दिन बिताया करता हो। वह समाज के विशुद्ध वातावरण में विचरण करता था, समाज के सुख-दुःख की भावना उसके हृदय को स्पर्श करती थी; वह दीन-दुखियों की दीनता पर चार आँसू बहाता था; वह सुखी जीवों के ऊपर रीझता था। वह भारतीय समाज का ही एक प्राणी था, जिसका हृदय सहानुभूति की भावना से नितान्त स्निग्ध होता था। वह अपने काव्यों में जनता के हृदय की बातों का, प्रवृत्तियों का जितना वर्णन करता था, उतना ही वह अपने देश की संस्कृति के भी मूल्यवान् आध्यात्मिक विचारों को अपने काव्यों में अङ्कित करता था। भारतीय संस्कृति का निखरा रूप हमें संस्कृत भाषा में निबद्ध साहित्य में दृष्टिगोचर होता है। बृहत्तर भारत में भारतीय संस्कृति का प्रचार तलवार के सहारे नहीं हुआ; कलम के सहारे हुआ। आज भी उस देश की सभ्यता तथा संस्कृति के गठन में संस्कृत-साहित्य का विशेष हाथ है। संस्कृत-साहित्य ने इन देशों की मूक जनता को भावों के प्रकटन का माध्यम प्रदान किया, हृदय को सरस बनाने के लिये कोमल भावमय कविता सिखलायी और समाज-व्यवस्था के नियमों को बतलाकर उन्हें बर्बरता से उन्मुक्त कर सभ्य और शिष्ट बनाया।

## साहित्य और तत्त्वज्ञान

संस्कृत-साहित्य के रूप, निर्माण तथा विकास के ऊपर भारतीय तत्त्वज्ञान का विशेष प्रभाव पड़ा है। भारतीय दर्शन सदा से आशावादी रहा है। नैराश्य की कालिमा दर्शन के

गगन-मण्डल को कतिपय क्षणों के लिए भले ही मलिन और कालिमापूर्ण बनाये, परन्तु आशावादिता का चन्द्रोदय उसे प्रकाश से पेशल तथा शान्ति से स्निग्ध सर्वदा बनाये रखता है। संस्कृत नाटकों के सुखान्त रूप की जानकारी के लिए भारतीय दार्शनिक विचारों से परिचय पाना नितान्त आवश्यक है। भारतीय तत्त्वज्ञान नैराश्य के भीतर से आशा का, विपत्ति के भीतर से सम्पत्ति का तथा दुःख के भीतर से सुख का उद्‌गम अवश्यम्भावी मानता है। संसार का पर्यवसान दुःख में नहीं है। यह जीवन व्यक्तित्व के विकास में अपना स्वतः मूल्य और महत्त्व रखता है। संघर्ष के भीतर से शान्ति की प्रभा छिटकती है; संग्राम के बीच में विजय का शंखनाद घोषित होता है। मानव की वैयक्तिक पूर्णता की अभिव्यक्ति में यह जीवन एक साधनमात्र है। निष्प्रपञ्च ब्रह्म की भी प्राप्ति प्रपंच के भीतर से ही तो होती है। फलतः संसार का व्यापक दुःख, परिदृश्यमान असंतोष तथा वैषम्यमय क्लेश अन्ततोगत्वा सुख में, संतोष में तथा आनन्द में परिणत होते हैं। इसी दार्शनिक विचारधारा के कारण जीवन के संघर्ष को प्रदर्शित करने पर भी नाटक का पर्यवसान सदा मंगलमय होता है। संस्कृत में दुःखान्त नाटकों के नितान्त अभाव का रहस्य इसी दार्शनिक सिद्धान्त में छिपा है। संस्कृत-नाटककारों के ऊपर जीवन के केवल सौख्यपक्ष के प्रदर्शक होने से एकांगित्व का आरोप कथमपि न्याय्य नहीं माना जा सकता। काव्य जीवन की पूर्ण अभिव्यक्ति है। सच्चा कवि जीवन के सुख-दुःखों में रमता है। वह जनता के जीवन का अनुभव कर उसके मार्मिक स्थलों को कमनीय भाषा में अभिव्यक्त करता है। उसके काव्यों में जनहृदय स्पन्दित होता है और जनता की मूक वेदना अपनी पूर्ण तथा प्रभावशाली अभिव्यंजना पाती है, उसकी कमनीय कृतियों में सुख और दुःख, वृद्धि और ह्रास, राग और द्वेष, मैत्री और विरोध के परस्पर संघर्ष से उत्पन्न नानात्मक स्थिति का ही मार्मिक अभिधान 'जीवन' है। इसकी पूर्ण अभिव्यञ्जना दुःख का सर्वथा परिहार कर देने पर क्या कभी हो सकती है? क्या संस्कृत का कवि जीवन के केवल सौख्यपक्ष के चित्रण में अपनी वाणी की चरितार्थता मानता है? नहीं, कभी नहीं। संस्कृति तथा जनजागरण का अग्रदूत संस्कृत-कवि तात्त्विक रूप से जीवन के अन्तस्तल को परखता है और उसका सच्चा वर्णन प्रस्तुत करता हैं, परन्तु जीवन का मङ्गलमय पर्यवसान तथा कल्याणमय उद्देश्य होने के कारण वह दुःख-पर्यवसायी काव्यों तथा नाटकों की रचना से सर्वदा पराङ्मुख होता है। संस्कृत-साहित्य का यही मौलिक वैशिष्ट्य है।

संस्कृत-साहित्य पर पाश्चात्त्य आलोचकों का यह आरोप है कि यह साहित्य अलंकार-पूर्ण तथा कृत्रिम है। परन्तु यह उनकी भ्रान्त धारणा है। संस्कृतकाव्यों में भी हृदय के भावों की उतनी ही नैसर्गिक अभिव्यक्ति है जितनी किसी भी प्रौढ़ साहित्य के मान्य काव्यों में हो सकती है। प्राचीन संस्कृत-कवियों के काव्य में सहज स्वाभाविकता का साम्राज्य है। ये कवि मानव-हृदय के सच्चे पारखी थे और अपनी सच्ची अनुभूतियों की अभिव्यंजना

के लिये इन्होंने 'रसमयी' पद्धति का आश्रय लिया था। वाल्मीकि, व्यास, कालिदास और अश्वघोष के काव्यों में कृत्रिमता नहीं, उनमें स्वाभाविकता का अभिव्यंजन सुकुमार शैली में हुआ है। अलङ्कारों की सजावट से चमत्कृत शैली का उदय सप्तम तथा अष्टम शतक के अनन्तर की एक घटना है। सप्तम-अष्टम शतक भारत के साहित्यिक इतिहास में पाण्डित्य का युग है। इस समय बौद्ध नैयायिकों और जैन दार्शनिकों के वेद-विरोधी तर्कों का खण्डन सनातनी पण्डितों ने प्रौढ़ तथा प्रामाणिक युक्तियों के बल पर किया। उस समय पाण्डित्य ही कवित्व की कसौटी बन गया। पाठकों के आदर्श में भी परिवर्तन हुआ। तत्कालीन कवि तर्कभावनाप्रधान पाठकों की रुचि के अनुरूप काव्यरचना में प्रवृत्त हुए। काव्य के लक्ष्य में परिवर्तन न होने पर भी परिवर्तित स्थिति ने कवियों को अलङ्कृत शैली में लिखने के लिये बाध्य किया। संस्कृत के आलोचनाशास्त्र में तो कृत्रिम शैली की अपेक्षा सुकुमार शैली को ही मान्यता मिली है। इसीलिए संस्कृत के प्रथम आलोचक भामह ने तर्कप्रधान शास्त्र से भावप्रधान काव्य का भेद दिखलाकर काव्य को स्पष्टतः 'आविद्वदङ्गनाबालप्रसिद्धार्थ' लिखा है। काव्य केवल विद्वानों के पुष्ट मस्तिष्क का ही विषय नहीं है, प्रत्युत वह शास्त्र से अनभिज्ञ बच्चों तथा स्त्रियों की भी समझ नें आने वाली वस्तु है। प्रसन्न काव्य की यही विशेषता है कि वह स्त्री तथा बच्चों की समझ में उतनी ही आसानी से आ जाय जितनी आसानी से किसी शिक्षितजन की समझ में। माधुर्य तथा प्रसाद गुण काव्य का प्राण माना गया है। ऐसी स्थिति में संस्कृत-काव्य पर कृत्रिमता का आरोप अज्ञानता का ही प्रतीक है।

हमारा संस्कृत-साहित्य समग्र सभ्य साहित्य से प्राचीनता, व्यापकता और अभिरामता में श्रेष्ठ है। अध्यात्म की गुत्थियों को सुलझाने वाले तथा मानव मस्तिष्क के चरम विकास को प्रकट करने वाले उपनिषद् भी संस्कृत भाषा में निबद्ध हैं। विश्व की उत्पत्ति से प्रलय तक विस्तृत इतिहास प्रस्तुत करने वाले पुराण भी इसी भाषा के महनीय ग्रन्थ है। आर्यों की प्राचीन रीतियों और परम्पराओं का प्रशस्त वर्णन करने वाले धर्मशास्त्र का निर्माण भी इसी भाषा में हुआ है। लौकिक अभ्युदय और पारलौकिक निःश्रेयस् की सिद्धि के साधक जितने ज्ञान और विज्ञान हैं, जितने कर्मकाण्ड तथा ज्ञानकाण्ड हैं, जितने शास्त्र तथा पुराण हैं, उन सबको अवगत करने का उपाय यही संस्कृत-साहित्य है। एक शब्द में यह कहा जा सकता है कि संस्कृत-साहित्य 'परा' तथा 'अपरा' विद्याओं का मनोरम भाण्डागार है, जिसके रहस्यों का सम्यग् ज्ञान संस्कृत के माध्यम से ही हो सकता है।

भारतवर्ष एक विशाल देश है। इस देश का साहित्य भी विपुलकाय है। भारतीय साहित्य में संस्कृत-वाङ्मय का विशेष महत्त्व है। संस्कृत-वाङ्मय मानव जीवन के चार पुरुषार्थ-धर्म, अर्थ, काम, मोक्ष-से सम्बद्ध सभी विषयों का साङ्गोपाङ्ग वर्णन करता है। जीवन का ऐसा कोई भी पक्ष नहीं, जिसका सूक्ष्म विवेचन संस्कृत वाङ्मय में न हो। विश्व की

भाषाओं में प्राचीनतम संस्कृत-साहित्य ने मानव-जीवन के विविध आयामों को सार्थक विस्तार दिया है। यद्यपि इस प्राचीन साहित्य में मोक्ष एवं धर्म को प्रमुख स्थान प्राप्त है, तथापि अर्थ एवं काम का भी यथास्थान उपयोगिता की दृष्टि से पर्याप्त वर्णन मिलता है। लौकिक सुख एवं आध्यात्मिक उत्कर्ष के लिए अपेक्षित सभी विषयों– धर्म, दर्शन, काव्य, संगीत, कला, नीति, ओषधि, ज्योतिष आदि समस्त तत्त्वों का सूक्ष्म एवं व्यापक विवेचन संस्कृतवाङ्मय में समाहित है। इन सभी विषयों के व्यापक वर्णन एवं चिन्तन ने विश्वमनीषा को अपनी ओर विशेषरूप से आकृष्ट किया है। संस्कृत का व्यापक विषय जनसाधारण के लिये अत्यन्त उपयोगी सिद्ध हो, इस उद्देश्य से उत्तर प्रदेश संस्कृत संस्थान ने संस्कृतवाङ्मय के बृहद् इतिहास को प्रकाशित करने की योजना बनायी और उस योजना को मूर्त रूप देने के भगीरथ प्रयास के फलस्वरूप संस्कृत वाङ्मय का बृहद् इतिहास १८ खण्डों में प्रकाश्यमान है। इस इतिहास के १८ खण्ड निम्नलिखित हैं-

१- वेद-खण्ड- इस खण्ड के अन्तर्गत संहिता, ब्राह्मण, आरण्यक और उपनिषद् हैं।

२- वेदाङ्ग-खण्ड- इसके अन्तर्गत शिक्षा, कल्प, व्याकरण, निरुक्त, छन्द, ज्योतिष और अनुक्रमणी-साहित्य हैं।

३- आर्षकाव्य-खण्ड- इसके अन्तर्गत रामायण एवं महाभारत हैं।

४- काव्य-खण्ड- इसके अन्तर्गत महाकाव्य, खण्डकाव्य, सन्देशकाव्य, रागकाव्य और स्तोत्रकाव्य हैं।

५- गद्यकाव्य-खण्ड- इसके अन्तर्गत, गद्यकाव्य, चम्पू एवं कथा-साहित्य हैं।

६- रूपक-खण्ड- इसके अन्तर्गत रूपकों के समस्त प्रकार हैं।

७- आधुनिक साहित्य-खण्ड- इसके अन्तर्गत संस्कृत-साहित्य के समस्त आधुनिक विषय हैं।

८- काव्यशास्त्र-खण्ड- इसके अन्तर्गत काव्यशास्त्र के सभी सम्प्रदाय हैं।

९- न्यायदर्शन-खण्ड- इसके अन्तर्गत, न्याय, वैशेषिक, मीमांसा, सांख्य एवं योग हैं।

१०- वेदान्तदर्शन-खण्ड- इसके अन्तर्गत अद्वैत, विशिष्टाद्वैतादि समस्त वेदान्त दर्शन हैं।

११- तन्त्रागम-खण्ड- इसके अन्तर्गत शैव, वैष्णव एवं शाक्त आगम हैं।

१२- नास्तिकदर्शन-खण्ड- इसके अन्तर्गत चार्वाक, जैन एवं बौद्धदर्शन हैं।

१३- पुराण-खण्ड- इसके अन्तर्गत अष्टादश पुराण एवं उपपुराण हैं।

१४- धर्मशास्त्र-खण्ड- इसके अन्तर्गत सभी स्मृतिशास्त्र हैं।

१५- व्याकरण, कोश-खण्ड- इसके अन्तर्गत, पाणिनि, पाणिनीतर व्याकरण तथा कोश हैं।

१६- ज्योतिष-खण्ड- इसके अन्तर्गत फलित एवं गणित दोनों ज्योतिष हैं।

१७- आयुर्वेद-खण्ड- इसके अन्तर्गत प्राचीन एवं नवीन सभी प्रकार के आयुर्वेद समाविष्ट हैं।

१८- राजनीतिशास्त्र, संगीतशास्त्र-खण्ड- इसमें राजनीति एवं संगीतशास्त्र हैं।

संस्कृत संस्थान द्वारा प्रकाश्यमान संस्कृत-वाङ्मय के बृहद् इतिहास का यह प्रथम 'वेद-खण्ड' पाठकों के समक्ष प्रस्तुत है। इस खण्ड में वैदिक वाङ्मय के संहिताओं, ब्राह्मणों, आरण्यकों एवं उपनिषदों का सांगोपांग विवेचन प्रस्तुत किया गया है जो विशेष उपादेय है। इस खण्ड के अध्ययन से जिज्ञासु पाठकों को समग्र वैदिक साहित्य के स्वरूप का सम्यग् ज्ञान होगा, ऐसा मेरा दृढ़ विश्वास है।

भारतीय संस्कृति के इतिहास में वेदों का स्थान नितान्त गौरवपूर्ण है। श्रुति की सुदृढ़ आधारशिला पर भारतीय धर्म तथा सभ्यता का भव्य प्रासाद प्रतिष्ठित है। आर्यों के आचार-विचार, रहन-सहन तथा धर्म-कर्म को भली-भाँति समझने के लिए वेदों का ज्ञान विशेष आवश्यक है। अपने प्रातिभ चक्षु के सहारे साक्षात्कृतधर्मा ऋषियों के द्वारा अनुभूत अध्यात्मशास्त्र के तत्त्वों की विशाल विमल शब्दराशि का ही नाम 'वेद' है। वेद पितृ, देव तथा मनुष्य का सनातन चक्षु है। इष्टप्राप्ति और अनिष्ट-परिहार के अलौकिक उपाय को बतलाने वाला ग्रन्थरत्न वेद ही है। वेद का वेदत्व इसी में है कि वह प्रत्यक्ष या अनुमान के द्वारा अज्ञेय उपाय का ज्ञान स्वयं कराता है-

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता।।**

आस्तिक वही है जो वेद की प्रामाणिकता में विश्वास रखे तथा नास्तिक वह है जो वेदों में श्रद्धा न रखे। ईश्वर के अस्तित्व को स्वीकार न करने वाला भी दर्शन आस्तिक माना गया है, वेद-प्रामाण्य को मानने के कारण। परन्तु वेद-प्रामाण्य को स्वीकार न करने वाला दर्शन नास्तिक कहा जाता है। सनातन धर्म में वेद की महिमा नितान्त गौरवमयी है। शतपथ-ब्राह्मण का स्पष्ट कथन है–धन से परिपूर्ण पृथिवी के दान करने से जितना फल मिलता है, वेदों के अध्ययन से उतना ही फल मिलता है, उतना ही नहीं, प्रत्युत उससे भी बढ़ कर अविनाशी अक्षय्य लोक मनुष्य प्राप्त करता है। अतः वेदों का स्वाध्याय करना अत्यन्त उपादेय है (शत.ब्रा. ११।५।६।१)। वेदज्ञ की प्रशंसा में मनु. १२।१०२ की यह उक्ति अत्यन्त मार्मिक है–वेदशास्त्र के तत्त्व को जानने वाला व्यक्ति जिस किसी आश्रम में निवास करता हुआ कार्य का सम्पादन करता है, वह इसी लोक में रहता हुआ

